श्रीशारदाम्बाचन्द्रमौलीश्वरौ विजयेतेतराम् ।

# अथ पतितोद्धारमीमांसा ॥



श्रीमत्परमहंसपरिव्राजकाचार्य्यपदवाक्यप्रमाणपा-
रीणयमाद्यष्टाङ्गयोगानुष्ठाननिष्ठ तपश्चर्य्याचर-
णचक्रवर्त्यनाद्यविच्छिन्नगुरुपरम्पराप्राप्तष-
ण्मतस्थापनाचार्य्यसांख्यत्रयप्रतिपादकवैदिक-
मार्गप्रवर्तकसर्वतन्त्रस्वतंत्रनिखिलनिगमा-
गमसारहृदय श्रीमत्सुधन्वसाम्राज्यप्रति-
ष्ठापनाचार्य्यव्याख्यानसिंहासनाधी-
श्वरराजाधिराजगुरुभूमण्डलाचार्य्य-
चातुर्वर्ण्यशिक्षकरत्नाकरतीरवास-
प्रभासपत्तनाधीश्वरपश्चिमाम्ना-
यश्रीशारदापीठाधीश्वरश्रीम-
च्छंकराचार्य्य[illegible]तीर्थ-
स्वामिचरणा[illegible]-
यमाण-
श्रीत्रिविक्रमतीर्थ
स्वामिचरणैः
निर्मिता ॥

सा च तच्छिष्यैः श्रीसोमतीर्थस्वामिभिः

प्रकाशिता ।





# भूमिका ।

विदाङ्कुर्वन्तु खलु तत्र भवन्तो भवन्तः शेमुषीमन्तो यत् "पतितोद्धारमीमांसा" नाम्नी पुस्तिका यासौ निरमायि । अत्र चेत्पक्षापक्षाविचारसंचारमकुर्वाणा धीमन्तो स्वस्वसम्मतिप्रदानेनानुग्रहीष्यन्ति तदा तेऽपि नाम विषयाः द्वितीयावृत्तौ संशोध्यानुग्राहकेभ्यो धन्यवादपुरःसरं मुद्रापयिष्यन्तेऽस्माभिः । अन्यथा नैव हि जातूत्तरं दास्यते वृथातर्कपरायणेभ्यः पण्डितम्मन्येभ्यः केभ्यश्चिदपि ।

बहुविचारतो लिखितायामप्यमुत्र दृष्टिदोषवशान्मुद्रणयंत्रदोषाद्वा क्वचिद्भवेदेवाशुद्धिः सापि नाम हंसतुल्यवृत्तिभिर्विद्वद्भिः संशोध्यैव सूचनीयश्चाहमपीति ।

गच्छतस्स्खलनं वापि, भवत्येव प्रमादतः ।
हसन्ति दुर्जनास्तत्र, समादधति सज्जनाः ॥

श्रीस्वामित्रिविक्रमतीर्थ,
शंकराचार्य–
शारदामठ–प्रभासपत्तन,

ओ३म् ॥

# अथ पतितोद्धारमीमांसा ॥



(१) अथातः पतितोद्धारजिज्ञासा ।

(२) विहिताकरणात् पतितः ।

(३) अविहितान्यथा न्यूनकरणाच्च ।

(४) व्रात्यनिषादम्लेच्छयवनपाखण्डिनः ।

(५) म्लेच्छीकृताश्च ।

(६) तत्संततयोऽपि ।

(७) उपनयनहीनद्विजो व्रात्यः ।

(८) निषादो वर्णानां पञ्चमः ।

(९) अन्त्यजादीनां तत्र गणना ।

(१०) असच्छूद्राणामपि ।

(११) क्षत्रिया अन्यथाचारधर्मवेषा म्लेच्छाः ।

(१२) तत्साकं व्यवहारिणो यवनाः ।

(१३) धर्मपरित्यागिनोऽधर्मसंग्राहिणश्च पाख-
ण्डिनः ।

(१४) म्लेच्छैर्बलाद्दासीकृता अवरुद्धा वा
म्लेच्छीकृताः ।

(१५) शनैश्शनैः क्रियालोपात् पातित्यम् ।

(१६) ब्राह्मणादर्शनात्तच्च ।

(१७) अवैधवृत्तिसेवनात् पञ्चमाद् युगाज्जाति-
परिवृत्तिः ।

(१८) स्वप्रमाद्वा ।

(१९) अज्ञानादापदि चेन्न ।

(२०) ज्ञानात् साम्यन्तु ।

(२१) संसर्गादपि ।

(२२) नवधा सः ।

(२३) निषादवर्ज्येषु वर्णत्वावि: ।

(२४) अव्यक्तैवपरम् ।

(२५) सूक्ष्मेक्षिकया तज्ज्ञानम् ।

(२६) शमादिशौर्यादिभ्यामपि ।

(२७) वार्तावृत्त्या च ।

(२८) आनुवंशिकानामनुवृत्तेरपि ।
(२९) क्रमशः क्षीणता पुष्टिर्वा तस्य संस्कारात् ।
(३०) तथैव श्रुतं स्मृतं दृष्टञ्च ।
(३१) त्रिपुरुषपर्य्यन्तं त्वौत्कट्यमेव ।
(३२) ततो यावद्द्वादशं स्थैर्यं परमावृद्धिश्च ।
(३३) एकविंशतिं यावत् तैण्यम् ।
(३४) तनुत्वानुभूतिरतः परम् ।
(३५) तेषामिच्छतां तदनुसार उद्धारक्रम इति आपस्तम्बः ।
(३६) प्रथमे वीजावस्थैव ।
(३७) पूर्वावस्थायां हि ।
(३८) तदानीं स्वल्पमात्रोपचार इति मानवाः ।
(३९) प्रौढायां त्वतिमात्रोपचारश्चेति ताण्डिनः ।
(४०) कातीयानामप्येवम् ।
(४१) शातातपानाञ्च ।
(४२) म्लेच्छीकृतानामप्येवमेवेति देवलः ।
(४३) निषादानां प्रसङ्गे स्पर्शत्वम् ।
(४४) यतो यवनाच्छ्रेयो निषादः ।

(४५) म्लेच्छादेरपि ।

(४६) अतः शिक्षासदाचारसंबोधाधिकारस्तेषाम् ।

(४७) नोपदेशं विना परमितः ।

(४८) निषादस्थपतेरिष्टेरप्यधिकारः ।

(४९) तत्राग्निस्तु लौकिक एव ।

(५०) न निषादमात्रस्य ।

(५१) अधिकारः सामर्थ्यापेक्षातः ।

(५२) क्षत्रियाद्वैश्यायां माहिषः ।

(५३) वैश्याच्छूद्र्यां करणी ।

(५४) माहिषात् करण्यां रथकार इति स्मार्ताः ।

(५५) परं त्रैवर्णिकातिरिक्तस्तु ।

(५६) तत्पर्य्यन्तानामेव श्रौतोऽग्निः ।

(५७) उपनयनादिकञ्च ।

(५८) निषादानामपि योग्यतायां प्रायश्चित्तमनुक्रमोपदेशः ।

(५९) तच्च ताण्ड्योक्तम् ।

(६०) सर्वगेधयाजिभिश्च कारयितव्यम् ।

(६१) क्रमेणाचारशुद्धेः शूद्रत्वाविः ।

(६२) पौर्वतनयोर्वृत्तिवषयोः परिवर्जनात् ।

(६३) स्वोचितयोः स्वीकारात् ।

(६४) नित्यानुष्ठानात् ।

(६५) प्रायश्चित्ताचरणाद् यथाशक्तिः ।

(६६) अकृतप्रायश्चित्तैः संसर्गवर्जनमावश्यकम् ।

(६७) बहुजनसम्मर्दादिषु च स्पर्शदोषो नेति स्मार्ताः ।

(६८) कर्मणि तु स्यादेव ।

(६९) जले च ।

(७०) अन्नादिषु च ।

(७१) कृतप्रायश्चित्तास्तु स्पृश्याएव ।

(७२) तेषां संततयोऽपि ।

(७३) उन्नतिस्तु श्रेष्ठेन यौनादिसम्बन्धात् ।

(७४) सम्यगाचारपालनात् ।

(७५) यथाविधिसंस्कारात् ।

(७६) उचितवृत्तिस्वीकारात् ।

(७७) धर्मपरिपालनात् ।

(७८) गुणाविर्भावात् ।

(७९) ततः संस्काराद्द्विजत्वं व्रात्यप्रायश्चित्तमनु ।

(८०) तच्च ताण्ड्योक्तम् ।

(८१) कात्यायनोऽप्येवम् ।

(८२) ततो गुणसम्पदोचितवर्णे प्रवेशः ।

(८३) व्रात्यस्य तूक्तम् ।

(८४) पाखण्डिनश्चापि व्रात्यवत् ।

(८५) म्लेच्छस्य त्ववैधाचरणत्यागात् श्रद्धां परीक्ष्यैव हि ।

(८६) अन्यत् समानं पूर्वेण ।

(८७) म्लेच्छीकृतानां तत्पारम्पर्याणामपि च ।

(८८) यवनानामपि म्लेच्छवत् ।

(८९) तत् संततेरप्येवम् ।

(९०) प्रायश्चित्तं शास्त्रेण ।

(९१) अधिकारोऽपि ।

(९२) कर्मोपदेशश्च ।

तक्षा च तन्तुवायश्च, नापिते रजकस्तथा।
पंचमश्चर्मकारश्च, कारवः शिल्पिनो मताः॥

(९३) तदनुरोधेनैवानुग्रहो निग्रहो वा ।

(९४) क्रमेणैवावनतिरुन्नतिर्वेति स्मार्ताः ।

(९५) तद्वत् स्वच्छूद्रत्वं तेषाम् ।

(९६) प्रदेशेषु केषुचिज्जातमप्येवम् ।

(९७) ज्ञातिष्वपि ( न्यात )भक्तिमार्गे भक्ताग्रण्यां यथा ।

(९८) वैष्णवेष्वपि ।

(९९) न ते शूद्रा अन्त्यजा वा परिगणिताः ।

(१००) यतः संस्काराज्जातिपरिवृत्तिरिति स्मार्ताः ।

(१०१) दीक्षयावेति भागवताः ।

(१०२) तान्त्रिकाश्च ।

(१०३) ब्राह्मणकाम्यादिभ्यः पाराशर्यः ।

(१०४) गर्भसंस्कारादितरेयः ।

(१०५) समुच्चयेन त्वाधुनिकाः ।

(१०६) स्थितिस्तस्याऽऽचाराद्धि ।

(१०७) क्रमश एकसोपानमूर्ध्वगमनम् ।

(१०८) ततस्थैर्ये द्वितीयं तदनु ।

(१०९) यथा अतिशूद्राच्छूद्रत्वम् ।

(११०) अस्पर्शत्वात् स्पर्शत्वम् तृणादिवत् ।

(१११) आपद्धर्म इति चेत्सर्वथैव सामान्यम् ।

(११२) नापत्तिर्विनिवृत्तेदानीमपि ।

(११३) बाह्यावरणे वर्म इवते ।

(११४) चर्मवद्वा ।

(११५) तदुपेक्षणात् समाजशरीररक्षापि दुःशका ।

(११६) पातित्यमपि स्वाश्रितत्यागात् तत्त्यागिनाम् ।

(११७) स्वधर्मत्यागेनैव तेषां स्पृश्यत्वमिदानीम् ।

(११८) वृत्तिवेषपरिवर्तने स्वस्यैव तदयुक्तम्

(११९) न धर्मत्यागेन ।

(१२०) तेन तु पातित्यवृद्धिरेवातो नैतदादरणीयम् ।

(१२१) तदर्थं शिक्षाभक्त्युपदेशः ।

(१२२) परमाविनेतव्याः ।
(१२३) देशसेवायां नियोक्तव्याः ।
(१२४) विदेशं प्रेषणीयाः ।
(१२५) मार्गशोधकाश्च कर्तव्याः ।
(१२६) तेषां शनैश्शनैरेवं स्वीकारः ।
(१२७) चातुर्वर्ण्यसेवया च शीघ्रं समुन्नतिस्तस्य ।
(१२८) समाजस्यानुमत्यैवोर्ध्वं गम्यते हि ।
(१२९) अकैतवात् सदाचाराच्च ।
(१३०) अन्यथाऽऽधःपतनम् ।
(१३१) पर्षन्निर्णयाद्वानुष्ठेयम् ।
(१३२) शिष्टवचनाद्वा ।
(१३३) आचार्योक्तेः ।
(१३४) गुरुवाक्यादेव च ।
(१३५) न तत्पूर्वम् ।
(१३६) उच्छास्त्रं त्याज्यम् ।
(१३७) यतः पाञ्चजन्यो गुरुः ।
(१३८) पतितपावनमेव प्रभुकृत्यम् ।

(१३६) बहुशो दृश्यते ।

(१४०) नोचेद्धानिरपरिमितापरिहार्य्या च ।

(१४१) शास्त्रादनुभवादपि ।

इति पतितोद्धारमीमांसा समाप्ता

आषाढ़शुक्ला ३ सं० १९७७ वि०



